त्र्यक्षरान्तर्गतं योगी वलयेत् सूत्रधारिणा ।
त्रिज्जःकारैस्तमाप्रेष्य ज्जः ज्जः ज्जः इत्यपि स्वयं पुनः[1] ॥ 222 ॥

वाममुष्टिग्रहो नाभौ प्रतीच्यवाग्दिशि स्थितः ।
खसूत्रं पातयेच्छ्रीमां[2]स्तथैवाधः प्रसूत्रयेत् ॥ 223 ॥

ॐ वज्रसमयसूत्रं मातिक्रम हूँ ।

सत्त्वार्थे भवतां कालो वियद्व्यापितथागतान् ।
चोदयेत्सूत्रध्वनिना तदिहागमनाय तु ॥ 224 ॥

यक्षप्रेतेन्द्रनागेशदिङ्मुखोऽग्न्यनिलाश्रितः ।
प्राक्प्रतीच्युत्तरावाक्चतुर्दिग्बहिः प्रसूत्र्य च ॥ 225 ॥

कोणसूत्रं समासूत्र्य चाग्नेयनैर्ऋतिस्थितः ।
प्राक्प्रतीच्युत्तरावाग्दिक्तथैवाष्टकमण्डलम्[3] ॥ 226 ॥

द्विगुणीकृत्य तत्सूत्रं चक्रमध्येषु धार्य च ।
चक्राकारं ततो बाह्यं वज्रसूत्रद्वयं पुनः ॥ 227 ॥

ऐशान्यां चक्रवाडं च स्वानुपूर्व्या प्रदक्षिणात् ।
सूत्रेण सूत्रयेत्प्राज्ञः सर्वदिक्समतां वहन् ॥ 228 ॥

अनिमित्तैरसिद्धिः स्यात् सूत्रच्छेदे गुरोः क्षयः ।
हीनातिरिक्ततो रोगा दिङ्मोहे शिष्यविभ्रमः ॥ 229 ॥

चतुरस्त्रं चतुर्द्वारं चतुस्तोरणभूषितम् ।
चतुःसूत्रसमायुक्तं पट्टस्रग्दामभूषितम् ॥ 230 ॥

कोणभागेषु सर्वेषु द्वारनिर्यूहसन्धिषु ।
खचितं वज्ररत्नैस्तु सूत्रयेद् बाह्यमण्डलम् ॥ 231 ॥

---

1. जपेत्- भो० ।
2. धीमान्- भो० ।
3. तथैव कृत्वाष्टकमण्डलम्- भो० ।

तस्याभ्यन्तरतश्चक्रमष्टमण्डलकोपमम् ।
अर्द्धेन बाह्यचक्रस्य समन्तात्परिमण्डलम् ॥ 232 ॥

चक्रस्तम्भाद्यरचितं वज्रावल्यावृतं शुभम् ।
विभजेच्च ततो द्वारं हीःकारक्रोधदृष्टितः ॥ 233 ॥

चक्राष्टभागिकं द्वारं वेदिकारहितं मतम् ।
द्वारप्रमाणा निर्यूहा देवतापट्टिकास्तथा ॥ 234 ॥

द्वारार्द्धा सर्वतो वेदी कपोलः पक्षकस्तथा ।
हारार्द्धहारचन्द्रार्कपट्टस्त्रग्दामपट्टिकाः[1] ॥ 235 ॥

रजोभूमिस्तदर्द्धेन मूलसूत्रं भुवो बहिः ।
चक्राद्यस्तम्भसूत्राणां भूमिस्तुल्या रजो भुवा ॥ 236 ॥

तोरणं त्रिगुणं द्वारात्पताकाघण्टयान्वितम्[2] ।
सद्घण्टामारुतोद्धूता पताका बाह्यकोणतः ॥ 237 ॥

चक्रानुरूपतोऽन्येषां यथाशोभं प्रकल्पना ।
संबुद्धज्ञानकायत्वाद्वाग्मी वज्रकुले स्मृतः ॥ 238 ॥

धर्मकायात्मसंशुद्धौ चित्तमण्डलमस्य तु ।
सत्त्वाशयं समासाद्य मानादिनियमः कृतः ॥ 239 ॥

प्रज्ञोपायोद्भवा सिद्धिर्जात्यादि[3]नियमेन किम् ।
तदेकहस्तमारभ्य यावद्धस्तसहस्रकम् ॥ 240 ॥

एवमासूत्र्य तच्चक्रं दीप्तदृष्ट्या रजांसि तु ।
प्राक्क्रमज्ञानसद्दी[4]प्त्या समुत्तेज्याभिमन्त्रयेत् ॥ 241 ॥

---

1. पट्टप्रमाणाः पट्टिकाः- भो० ।
2. ०मालयान्वितम्- भो० ।
3. ०मानादि०- भो० ।
4. 'सत्' नास्ति- भो० ।

ॐ वज्रचित्त( त्र )[1] समय हूँ।

धर्मधातुरयं शुद्धः सत्त्वधातुप्रमोचकः ।
स्वयं मञ्जुरवो राजा सर्वताथागतालयः ॥ 242 ॥

सर्वदोषविनिर्मुक्तश्चक्राभ्यन्तरसंस्थितः ।
ऐशानीं दिशमाश्रित्य[2] गुरुर्वामेन मुष्टिना ॥ 243 ॥

श्वेतं पीतं तथा रक्तं हरितं कृष्णमेव च ।
समप्रदक्षिणाच्छिन्नावक्रां रेखां[3] प्रपातयेत् ॥ 244 ॥

समां च पातयेद्रेखां द्वारविंशतिभागिकाम् ।
स्थूलपाते भवेद् व्याधिः कृशया धननाशनम् ॥ 245 ॥

विद्वेषो वक्रया मृत्युश्छिन्नया गुरुशिष्ययोः ।
अप्रदक्षिणपाते तु रजसां कीलनं भवेत् ॥ 246 ॥

श्वेतवज्रमयी सूची सौवर्णालम्बनापरा ।
पद्मरागमयी सूची तथा मरकतापरा ॥ 247 ॥

कृष्णाभ्यन्तरतो ज्ञेया एष रङ्गक्रमोऽस्य तु[4] ।
पूर्वेण तु महाश्वेतं दक्षिणे पीतसंयुतम् ॥ 248 ॥

लोहितं पश्चिमभागं माञ्जिष्ठोत्तरसंयुतम् ।
मध्यतो भूमिभागं तु इन्द्रनीलप्रभास्वरम् ॥ 249 ॥

प्रज्ञोपायात्मको नित्यं संलिखेत् सुसमाहितः ।
यवमात्रान्तरा रेखा पातनीया परस्परम् ॥ 250 ॥

कुण्डलामृतवज्रेण सर्वदुष्टान् प्रमर्दयन् ।
महामुद्रास्य दंष्ट्रोक्ता दुष्टशत्रुश्च मन्त्रराट् ॥ 251 ॥

---

1. ०चित्र- भो०।
2. आरभ्य- भो०।
3. रजां- भो०।
4. ०क्रमः स्मृतः- भो०।

नमः समन्तकायवाक्चित्तवज्राणाम्। नमो वज्रक्रोधाय महादंष्ट्रोत्कटभैरवाय असिमुषलपर्शुपाशहस्ताय। ॐ अमृतकुण्डलि ख-ख खाहि-खाहि तिष्ठ-तिष्ठ बन्ध-बन्ध हन-हन दह-दह गर्ज-गर्ज विस्फोटय-विस्फोटय सर्वविघ्नविनायकान् महागणपति-जीवितान्तकराय हूँ फट्।

एवं मण्डलमालिख्य चन्द्रसूर्यकृतासनम् ।
मध्ये खड्गं लिखेच्छ्यामं सुविशुद्धादिभास्वरम् ॥ 252 ॥

पूर्वेणाष्टारं सच्चक्रमादर्शादिसमुज्ज्वलम् ।
सव्ये रत्नं हरिताभं नवाङ्गं समतोन्नतम् ॥ 253 ॥

पश्चिमेऽष्टदलं पद्मं प्रत्यवेक्षादिरक्तकम् ।
उत्तरे तु सत् खड्गं कृत्यादिप्रतिमण्डितम् ॥ 254 ॥

उपायैर्नेत्रमाग्नेयां नैर्ऋत्यां वज्रमर्थनात्[1] ।
वायव्यां विकचास्यं तु बलात्पद्मं सकन्दकम् ॥ 255 ॥

ऐशान्यामुत्पलं ज्ञानात्[2] पीतं नीलाभ्रशोभनम् ।
अ( आ )ग्नेय्यादिचतुष्कोणे पूर्वद्वारद्विपार्श्वयोः ॥ 256 ॥

दर्पणं च तथा वीणां गन्धशंखरसायनम् ।
वस्त्रं धर्मोदयं( य )श्चैव दानशीलादिशोधितम्[3] ॥ 257 ॥

श्रद्धादिमुद्गरं दण्डं पद्मं वज्रं चतुर्थकम् ।
द्वारेषु सर्वथा[4] ज्ञात्वा स्फुटं ध्यात्वा स्वचक्रकम् ॥ 258 ॥

प्राग्वत्प्रज्ञाङ्गसंयोगाद्[5] बुद्धान् स्वान्तर्निवेश्य च ।
सच्चित्तेन वियद्व्याप्य चक्रपार्श्वकृतास्पदान् ॥ 259 ॥

---

1. प्रणिधानम्- भो०।
2. ज्ञानं- भो०।
3. शोभितम्- भो०।
4. विस्पष्टं कुन्दवत्- भो०।
5. प्रज्ञासंनिवेशात्- भो०।

तैः समायातविघ्नांस्तान्समुत्सार्याभिरक्ष्य च ।
यमार्यादिभिराकृष्यावेश्य बध्वा वशं नयेत् ॥ 260 ॥

चक्षुःकायाद्यधिष्ठायार्घाभिषेकाभिपूजनम् ।
कृत्वा स्तुत्वाथ संप्रीण्य जप्त्वा विभाव्य तोषयेत् ॥ 261 ॥

प्राग्वत् सत्पद्मभाण्डे तु कृत्वा ज्ञानामृतामृतम् ।
दिक्पालान् स्वस्वयोगस्थान् प्रपूज्य मण्डलं विशेत् ॥ 262 ॥

त्रैलोक्यविजयो भूत्वा यथाप्त्याभरणाम्बरः ।
कृतप्रदक्षिणश्चक्रं नत्वा होमेन पूर( ज )येत् ॥ 263 ॥

चतुरङ्गुलमात्यज्य तन्मानाब्जप्रफुल्लया ।
वेद्या हस्तार्द्धहस्ताधश्चक्रवत् सार्वकर्मिकम् ॥ 264 ॥

दैर्घादुच्छ्रयतः खड्गमष्टैकाङ्गुलमानकम् ।
कुण्डमध्ये लिखेच्चक्ररत्नाब्जखड्गमध्यगम् ॥ 265 ॥

बहिर्वेष्टितवज्रालीं योगी पूर्वमुखस्थितः ।
जप्त्वा सर्वकृता रक्ष्य वामेऽर्घाद्यन्यदन्यत्( तः ) ॥ 266 ॥

न्यस्योपकरणं प्रोक्ष्य मञ्जुवज्रात्मयोगवान् ।
क्षीरवृक्षेन्धनादीप्तमग्निं त्र्यक्षररेचितम् ॥ 267 ॥

प्रज्वाल्य व्यजनाघातैः कुशान् दद्यात् प्रदक्षिणम् ।
आद्यजहत् स च ( आद्यहृज्जं च रं ) त्र्यस्त्राब्जस्थं
रुं( रं )बीजसम्भवम् ॥ 268 ॥

ध्यात्वा पीतं त्रिवक्त्रं तु पीनं प्रज्ञाङ्गसङ्गिनम् ।
कुण्डिकाभयदण्डाक्षमालाकरमिहानलम् ॥ 269 ॥

आवाह्य ज्ञानसद्वह्निं प्राग्वत् त्रितत्त्वटक्किना[1] ।
अभ्युक्षणादिकं तस्य कृत्वासननिवेशनम् ॥ 270 ॥

---

1. ०पाठेन- भो० ।

स्रुक्स्रुवे हस्तदण्डाधो वज्ररत्नैस्तदूर्ध्वतः ।
चतुरस्राङ्गुला पात्री द्व्यङ्गुलखातवज्रधा( ज्राधः ) ॥ 271 ॥

चतुरङ्गुलवज्रान्तरन्ते पद्मदलाकृतिः ।
अन्तर्वज्राङ्गुलं खातं द्व्यङ्गुलाब्जदलं स्रुवम् ॥ 272 ॥

ध्यात्वा स्वदैवतं बीजं प्रदीप्तं स्रुक्स्रुवानने ।
दद्यात्पूर्णाहुतिं तस्मै रेफं विन्यस्य तन्मुखे ॥ 273 ॥

जुह्वीत समिधो धन्यः समिद्धेऽग्नौ[1] घृतं तिलान् ।
दूर्वाऽखण्डं तु दध्यन्नं कुशान् विधिक्रमादतः ॥ 274 ॥

तथताज्ञानसद्वह्नेर्हृच्चन्द्रे मं भवाधिपम् ।
सच्चक्रं जुहुयाद् ध्यात्वा बाह्यपूजादिपूर्वकम् ॥ 275 ॥

ॐ अग्नये स्वाहा। घृतस्य॥ ॐ सर्वपाप[2]दहनवज्राय सर्वपापं दह स्वाहा। तिलानाम्॥ ॐ वज्रायुषे[3] स्वाहा। दूर्वायाः॥ ॐ वज्रपुष्टये स्वाहा। अखण्डतण्डुलानाम्॥ ॐ सर्वसम्पदे स्वाहा। दध्यन्नस्य॥ ॐ अप्रतिहतवज्राय स्वाहा। कुशानाम्॥

पुष्टिशान्तिवशाकर्षे द्वेषोच्चाटाभिचारके ।
ॐ स्वाहा होः जः हूँ हूँ फट् मन्त्रान्ते चापि चोदना॥ 276 ॥

हृत्सत्त्वात् स्वाधिपात् सर्वाः प्रीण्यन्ते देवता इति ।
ध्यायंश्चन्द्रादिकैरन्यैर्द्रव्यैः संतर्प्य पूर्ववत् ॥ 277 ॥

हृच्चन्द्रचक्रसज्जिह्वमन्ते पूर्णाहुतिं तथा ।
अभ्युक्ष्याचमनार्घं दत्त्वा पूज्य स्तुत्वा[4] विसर्जयेत् ॥ 278 ॥

शेषं हव्यं स्वयोगात्मा वह्नौ हुत्वाथ तं तथा ।
विसर्ज्य प्राग्विधानेन चक्रमापूज्य संविशेत् ॥ 279 ॥

---

1. समिधग्नौ- भो०।
2. सर्वपापं- भो०।
3. सर्वायुषे- भो०।
4. 'स्तुत्वा' नास्ति- भो०।

शिष्यप्रवेशविधिना प्रविश्यादौ स्वयं कृती[1] ।
निष्पाद्य सेकपर्यन्तं[2] प्राप्यानुज्ञा( ज्ञां ) कुलाधिपान् ॥ 280 ॥

महारागोद्भवं तत्त्वं चक्रं च प्रतिबिम्बवत् ।
पुरे शिष्यप्रवेशार्थं तत्त्वं[3] सत्यं च श्रावयेत्[4] ॥ 281 ॥

आकाशोत्पादचिह्नत्वादनादिनिधनः परः ।
महावज्रमयः सत्त्वो मञ्जुवज्राद्य सिद्ध मे[5] ॥ 282 ॥

सर्वोत्तममहासिद्धि[6]माहैश्वर्याधिदैवत ।
सर्ववज्रधरो राजा सिद्ध मे परमाक्षर ॥ 283 ॥

निर्दोषः शाश्वतश्चासि सर्वरागानुरागण ।
तत्त्वेन सिद्ध मे[7] भगवन् महारागो महारत ॥ 284 ॥

अत्यन्तशुद्धसर्वाग्र आदिमुक्तस्तथागतः ।
समन्तभद्र सर्वात्मा बोधिसत्त्व प्रसिद्ध मे ॥ 285 ॥

सर्वोत्तममहासिद्धिमाहैश्वर्याग्रमुद्रया ।
सिद्धवज्र महोत्कर्षाद् वज्रगर्वापते मम ॥ 286 ॥

सर्वसत्त्वमनोव्यापी सर्वसत्त्वहृदि स्थितः ।
सर्वसत्त्वपिता चैव कामोऽग्र्यः समयाग्रिणाम् ॥ 287 ॥

येन सत्येन सज्ज्ञानं प्रज्ञोपायात्ममण्डलम् ।
तेन सत्येन मे नाथ कामांस्त्वं परिपूरय ॥ 288 ॥

प्रतिबिम्बसमा धर्मा अच्छाः शुद्धा ह्यनाविलाः ।
अग्राह्या अनभिलाप्याश्च हेतुकर्मसमुद्भवाः ॥ 289 ॥

---

1. 'कृती' नास्ति- भो० ।
2. सेककर्मान्तम्- भो० ।
3. इदं तत्त्वं- भो० ।
4. कीर्तयेत्- भो० ।
5. 'मे' नास्ति- भो० ।
6. ०सिद्धे- भो० ।
7. 'मे' नास्ति- भो० ।

तथता तत्त्वनिर्याता[1] इति[2] सत्येन मण्डले ।
प्रतिबिम्बं स्फुटं शिष्याः सर्वे पश्यन्त्वकल्मषाः ॥ 290 ॥

सामान्यसंवरं शिष्यं प्राग्वत्कायादिभास्वरम् ।
जमनी( यवनि )कान्तरं[3] प्रोक्ष्य सर्वकृत् कलशांस्तथा ॥ 291 ॥

रक्ताम्बरं तदास्यं च पृच्छेत् कस्त्वमिति प्रिय ।
शिष्येणापि ततो वाच्यं[4] सुभगोऽहमिति प्रिय[5] ॥ 292 ॥

संपूज्य स्त्रक्करं द्वारि तथैवादत्तदक्षिणम्[6] ।
योगचित्तं समुत्पाद्य हृदि वज्रं[7] हृदा[8] न्यसेत् ॥ 293 ॥

मन्त्रः— ॐ सर्वयोगच्चित्तमुत्पादयामि सुरते समयस्त्वं होः सिध्य वज्र यथासुखम्। अद्य त्वं सर्वतथागताधिष्ठितो भविष्यसि। न च त्वयेदं सर्वतथागतपरमरहस्यममण्डलप्रविष्टाय वक्तव्यं न चाश्रद्धा[ य दा ]तव्यमिति वाच्यम्।

यमार्यादि स्वसन्मन्त्रैः समाकृष्य प्रवेशय च ।
पञ्चाक्षरैरथाप्येवं वाच्यं सत्[9]संवरग्रहे ॥ 294 ॥

अद्य त्वं सर्वतथागतकुले प्रविष्टः। तदहं ते वज्रज्ञानमुत्पादयामि येन ज्ञानेन त्वं सर्वतथागतसिद्धीरपि प्राप्यसि किमुतान्याः सिद्धीः। न च त्वयादृष्टमण्डलस्य पुरतो[10] वक्तव्यम्।

मा ते[11] समयो व्यथे( व्यर्थं गच्छे )दिति[12] तद्धृदि वज्रमास्थाप्य।
ॐ वज्रसत्त्व स्वयं तेऽद्य हृदये समवस्थितः ॥ 295 ॥

---

1. ०निर्जाता- भो०।
2. अनेन- भो०।
3. यवनिकान्तम्- भो०।
4. वचः- भो०।
5. वाच्यम्- भो०।
6. दत्तदक्षिणः- भो०।
7. हृद्वज्रं- भो०।
8. हृदि- भो०।
9. 'सत्' नास्ति- भो०।
10. अदृष्टमहामण्डलानाम्- भो०।
11. 'मा ते' नास्ति- भो०।
12. 'इति' नास्ति- भो०।

निर्भिद्य तत्क्षणं यायाद् यदि ब्रूयादिमं नयम् ।
पद्मस्थं त्र्यक्षरोज्वलं पाययेदमृतं पञ्च ॥ 296 ॥

इदं ते नारकं वारि समयातिक्रमाद् दहेत् ।
समयरक्षणात् सिद्धिः पिब वज्रामृतोदकम् ॥ 297 ॥

ॐ वज्रोदक ठः[1] ॥ दृढप्रतिज्ञमिदं वदेत्। अद्यप्रभृति तवाहं वज्रपाणिर्यदहं ब्रूयामिमं कुरु तत् त्वया कर्तव्यम्। न चाहमवमन्तव्यो मा ते विषमापरिहारेण कालक्रियां कृत्वा नरकपतनं स्यात्[2] ।

ब्रूयाद्ब्रूहि ततः शिष्यान्
सर्वतथागताश्चाधितिष्ठन्तां वज्रसत्त्वो मे आविशतु ।
वाचयित्वा च तद्धृदि ॥

वज्राङ्कं कोणमाहेन्द्रे हूँ ध्यायात् पीत लँ भवे[3] ।
वारुणं वँ भवं शुक्लं घटाङ्कं परिमण्डलम् ॥ 298 ॥

नीलध्वजाङ्कं धन्वाभं वायव्यं यँ भवं चलम् ।
काये वाचि तयोर्हः आः[4] पादाधो झैः समुज्वलम् ॥ 299 ॥

वायव्ये रँ भवं त्र्यस्त्रेणोद्दीप्य शिष्यमाविशेत् ।
आवेशय स्तोभय[5] ररर चालय २ हूँ हः आः झैः ॥ 300 ॥

जिह्वायां रक्तामाःकारं ध्यात्वाविष्टं पुनर्वदेत् ।
रागवज्रं तमाभुज्य ब्रूहि वज्र शुभाशुभम् ॥ 301 ॥

तमावेशं दृढीकुर्वन् तिष्ठ वज्रेति तं लपेत् ।
प्रक्षेपयेत् स्त्रजं चक्रे प्रतीच्छ वज्र होः वदेत् ॥ 302 ॥

---

1. ठ ठ ठ- भो०।
2. 'इति ब्रूयात्' इत्यधिकम्- भो०।
3. 'वज्राङ्कं...भवे' इत्यत्र भोटपाठो यथा—'मण्डले कोणमाहेन्द्रे वज्राङ्कं पीतवर्णकम्। लंभवं हूं ध्यायात्।'
4. 'ध्यायात्' इत्यधिकम्- भो०।
5. स्तंभय- भो०।

तां शिरसि बन्धयेत् प्रतिगृह्य त्वमिमं सत्त्वं महाबल।
चिह्नैः चिह्नसमीपे वा स्रक्[1]प्रपन्नाप्रपन्नयोः ॥ 303 ॥

पतेच्छ्रद्धयापि तद्योगं दद्याद्धव्यतयाथवा ।
सज्वालं प्रणवं नेत्रे ध्यात्वा[2] ॥

ॐ[3] वज्रसत्त्वः स्वयं[4] तेऽद्य चक्षूद्घाटनतत्परः ।
उद्घाटयति सर्वं यो वज्रचक्षुरनुत्तरम् ॥ 305 ॥
[5]चक्रं प्रदर्शयेत् ॥ 304 ॥

चक्राधिपं समारभ्य यावदमृतकुण्डलिम् ।
सेचयेदम्बुना मूर्ध्नि वज्राभिषिञ्चिवाग्ब्रुवन् ॥ 306 ॥

सेचयेन्मौलिना प्राग्वद्दत्त्वा चाधिपदैवतम् ।
हृदि संग्राह्य तद्वज्रं वज्रेणाप्यभिषेचयेत् ॥ 307 ॥

अद्याभिषिक्तस्त्वमसि बुद्धैर्वज्राभिषेकतः ।
इदं तत्सर्वबुद्धत्वं गृह्य वज्रं सुसिद्धये[6] ॥ 308 ॥

आलिङ्ग्य वज्रघण्टाभ्यां स्वाधिपात्[7]-

ॐ वज्राधिपति त्वामभिषिञ्चामि तिष्ठ वज्रसमयस्त्वम्। ॐ वज्रसत्त्व त्वामभिषिञ्चामि वज्रनामाभिषेकतः। हे अमुक वज्र!

मूर्ध्निनामतः ।

यद्यद् भाति स्वसर्वस्वं मुख्यं तन्मञ्जुराट् स्वयम् ।
धर्माः शुद्धाः प्रकृत्या यद् बुद्धज्ञानचयः[8] स हि ॥ 309 ॥

स्वस्यैव चक्रवर्तित्वे श्रीध्वनिर्नाम आदितः ।
सर्वे सर्वाधिपत्या तु वज्रान्तो हे नियोजिताः ॥ 310 ॥

---

1. 'स्रक्' नास्ति- भो०।
2. 'ततः' इत्यधिकम्- भो०।
3. 'ॐ' नास्ति- भो०।
4. 'स्वयम्' नास्ति- भो०।
5. इतः पूर्वं संस्कृतमातृकायां 'ध्यात्वा' इत्यधिकम्।
6. 'इदं [तत्] गृह्य वज्र त्वं सर्वबुद्धसुद्धिये'- भो०।
7. इतपरः भोटपाठे 'अभिषेकं दद्यात्' इत्यधिकम्।
8. 'चयः' नास्ति-- भो०।

अब्धातुशुद्धिरक्षोभ्या मकुटः समतात्मकः ।
वज्रं सत्प्रत्यवेक्षात्माधिपः कृत्यकरोऽर्थदः ॥ 311 ॥

ज्ञानं विद्यात्र वज्रं स्याद्धातुर्गोत्रं वशीह्य( कृ )तः ।
व्रतव्याकरणाश्वासा विद्यासेकेऽपि नाम्यमी ॥ 312 ॥

इदं तत्सर्वबुद्धत्वं वज्रसत्त्वकरे स्थितम् ।
त्वयापि हि सदा धार्यं वज्रपाणि[1] दृढव्रतम् ॥ 313 ॥

ॐ सर्वतथागतसिद्धिवज्रसमये[2] तिष्ठ एष त्वां धारयामि ह्रीः[3] हि हि हि हि हूँ।

सर्वान्वज्रव्रतं दत्त्वा वज्रं तत्त्वेन ग्राहयेत् ।
अनादिनिधनः सत्त्वो वज्रसत्त्वो महारतः ॥ 314 ॥

समन्तभद्रः सर्वात्मा वज्रगर्वापतिः पतिः ।
घण्टां तत्त्वेन संग्राह्य धर्मशब्देन वादयेत्[4] ॥ 315 ॥

इयं सा सर्वबुद्धानां प्रज्ञाघोषानुगा स्मृता ।
त्वयापि हि सदा धार्या बोधिरग्रा जिनैर्मता ।
तां[5] तद्धर्मेण वादयेत् ॥ 316 ॥

स्वभावशुद्धो हि भवः स्वभावैर्विभवीकृतः ।
स्वभावशुद्धैः सत्सत्त्वैः क्रियते परमो भवः ॥ 317 ॥

अधिष्ठाय महामुद्रां हृद्धिः सेवादिकीर्तितैः ।
समयैः कामरूपाद्यैर्जपेन्मन्त्रमव्यङ्गतः ॥ 318 ॥

स्वसंवेद्यस्वभावैस्तैः सर्वदिक्त्र्यध्वसंस्थितैः ।
स्वाधिदैवतयोगेन स्वं परांश्चैव पूजयेत् ॥ 319 ॥

---

1. वज्रसत्त्व- भो०।
2. समय- भो०।
3. 'ह्रीः' नास्ति- भो०।
4. संस्कृतमातृकायामयमन्तिमः पादो नोपलभ्यते। गृहीतस्तु भोटानुसारी।
5. 'ताम्' नास्ति- भो०।

दुष्करैर्नियमैस्तैर्यत्[1] सेव्यमानैर्न सिद्धयः ।
सिध्यन्तेऽन्तर्द्ध्यभिज्ञाखचारीवाक्चित्तकायजाः ॥ 320 ॥

तस्माद् बुद्धाश्च सत्सत्त्वा मन्त्रचर्याग्रचारिणः ।
प्राप्ता धर्माक्षरं श्रेष्ठं सर्वकामोपसेवनैः ॥ 321 ॥

सेवयन् कामगुणान् पञ्च सुखदुःखोभयात्मकान् ।
ज्ञानार्थी रागिणां योगात् साधयेत् सर्वमेव[2] हि ॥ 322 ॥

कायवाक्चित्तसंसिद्धेर्याश्चान्या हीनजाः स्मृताः ।
सिध्यन्ते मन्त्रजापात्तु कायवाक्चित्तभावनैः ॥ 323 ॥

यदुक्तम्[3]—

वज्रं तत्त्वेन संगृह्य घण्टां धर्मेण वाद्य च ।
समयेन महामुद्रामधिष्ठाय हृदा जपेत् ॥ 324 । इति ॥

तत्प्रत्युक्तम्—

गृहीत[4]संवरं शिष्यं तथैव[5] दत्तदक्षिणम् ।
याचयेदभिषेकाय प्रणाम्यैवं तु गाथया ॥ 325 ॥

बोधिवज्रेण बुद्धानां यथा दत्तो महामहः ।
ममापि त्राणनार्थाय खवज्राद्य[6] ददाहि मे ॥ 326 ॥

प्रवेशद्वारपीठस्थाष्टदलाब्जेष्टयोगिनम्[7] ।
सर्वदिक् त्र्यध्वखव्यापिबुद्धचक्रैः स्वहृद्भवैः ॥ 327 ॥

वाद्यगन्धाद्युपेतैस्तैः[8] प्राग्वद् विद्याभिषेकिणम् ।
महावज्राभिषेकेण सेचयेदिति गाथया ॥ 328 ॥

---

1. तीव्रैः- भो०; द्र०-गु० स० त०- 7.3
2. शीघ्रमेव- भो०।
3. 'यदुक्तं' 'तत्प्रत्युक्तम्' इत्ययमंशो भोटपाठे श्लोकार्धेन अनूदितः।
4. 'गृहीतम्' इति संस्कृतमातृकायाम्।
5. 'तथैवा०', इति संस्कृतमातृकायाम्।
6. 'अद्य' नास्ति- भो०।
7. स्वदेवता- भो०।
8. ०द्युपेतेति- भो०।

अभिषेकं महावज्रं त्रैधातुकनमस्कृतम् ।
ददामि सर्वबुद्धानां त्रिगुह्यालयसंभवम् ॥ 329 ॥

दत्त्वाविवर्त्यसंसेकं चक्रतत्त्वं तु दर्शयेत्[1] ।
चतुरस्रमवैषम्याद्बुद्धाबुद्धसमत्वतः ॥ 330 ॥

कायविच्चित्तधर्माणां नानैकत्वाद्ययोगतः ।
तत्स्मृतिस्तत्र या श्रद्धा प्राग्द्वारं बोधये मतम् ॥ 331 ॥

भूतभाविविपर्यासहान्यनुत्पत्तये ततः ।
अभूतोत्पन्नतथ्यस्य चोत्पत्तिस्थितये पुनः ॥ 332 ॥

अवाग्द्वारं चतुर्वीर्यच्छन्दोत्साहस्थितिर्मतिः ।
पश्चिमं ऋद्धिपादास्तु द्वारं तत् स्मृतिरत्र तु ॥ 333 ॥

श्रद्धावीर्यस्मृतिध्यानप्रज्ञेन्द्रियबलातुलम् ।
समाधिरुत्तरं चैवं चतुर्द्वारं स्मृतीन्द्रियैः ॥ 334 ॥

प्रथमादिचर्तुध्यानैश्चतुस्तोरणवद्भवेत् ।
शूरङ्गमखगञ्जादिसमाधिर्वेदिकाः स्मृताः ॥ 335 ॥

वेद्यां[2] पूजाकरव्यग्रग्रन्थादिधारिणीचयम् ।
यच्चित्राभरणं तस्मात् सर्वाशापरिपूरणम् ॥ 336 ॥

विनयोद्धूतसद्धर्मनवाङ्गरवसर्वगम् ।
मारुतोद्धूतविश्वाग्रपताकाघण्टानादितम् ॥ 337 ॥

ज्ञानेष्वादर्शबोध्यङ्गैः सर्वदिक्षु प्रभास्वरैः ।
हारार्द्धहारचन्द्रार्कादर्शस्त्रक्चामरोज्ज्वलम्[3] ॥ 338 ॥

चक्ररत्नादिसत्[4]स्तम्भैर्विमोक्षाष्टकशोधितैः ।
तस्याभ्यन्तरतश्चक्रमष्टमण्डलकोपमम् ॥ 339 ॥

---

1. दद्यात्- भो० ।
2. 'वेद्याम्' नास्ति- भो० ।
3. 'उज्ज्वलम्' नास्ति- भो० ।
4. 'सत्' नास्ति- भो० ।

सर्वदिक्त्र्यध्वसम्भूत[1] वज्रयानप्रवर्तनात् ।
वज्रसूत्रपरिक्षिप्तं समन्तात्परिमण्डलम् ॥ 340 ॥

रङ्गाणि पञ्चसंबुद्धास्तु ज्ञानैः सत्त्वरञ्जनात् ।
इन्द्रियार्थादिसंशुद्ध्या स्वलक्षणविवेकतः ॥ 341 ॥

प्रज्ञाज्ञानामृतं पीतं वज्रिणां कलशं तु तत् ।
सम्भारपूरिनिष्यन्दः पूर्णकुम्भः कृपार्द्रतः ॥ 342 ॥

पुष्पधूपमहादीपगन्धाख्यं यच्च मण्डले ।
बोध्यङ्गसुमनोह्लादिधर्मोल्कायशसां चयः ॥ 343 ॥

धर्माहारस्तु नैवेद्यं ह्रीरपत्राप्यमम्बरम् ।
सुगीतनृत्यवादित्रं महासुखविवर्द्धनम् ॥ 344 ॥

पुरं मोक्षपुरत्वाच्च मण्डलं सारसंग्रहात् ।
चक्रतत्त्वं समादर्श्य देवतातत्त्वमादिशेत् ॥ 345 ॥

श्रद्धावीर्यस्मृतिध्यानशुद्ध्या सद्द्वारिरूपकम् ।
कायादौ योगदृ( धृ )क्चित्तं प्रज्ञाशुद्ध्या सुनिर्मलम् ॥ 346 ॥

दानादिषट्बहिःशुद्ध्या रूपवज्रादिभावधृक् ।
भूपायाद्यनिमित्तत्वाल्लोचनादिस्वभावकम् ॥ 347 ॥

अर्थसत्त्वात्मसंकल्पप्रवृत्तिज्ञानशुद्धितः ।
आदर्शादिकं च ज्ञानं सर्वबुद्धस्वरूपकम् ॥ 348 ॥

ज्ञानानुत्पादयोगेन चक्रेशाकारभास्वरम् ।
रूपादिभ्रमसंशुद्ध्या स्कन्धायतनधातुकम् ॥ 349 ॥

मात्सर्यादिपरावृत्तैः परमाभूसु सुस्थिरम् ।
स्वविपक्ष[2]परावृत्त्या बलाद्यविकलामलम् ॥ 350 ॥

---

1. संबुद्ध- भो०।
2. ०विकल्प- भो०।

अविकल्पात्तु गाम्भीर्यमौदार्यं स्वपरोदयात् ।
गाम्भीर्यौदार्यतश्चैतः प्रज्ञोपायात्मकं मतम्[1] ॥ 351 ॥

प्रत्यात्मवेद्यधर्मत्वाद् भेदाभेदाद्यसंस्थितम् ।
एवं प्रपञ्चिते भान्ति फलाः पारमितादयः ॥ 352 ॥

समयाग्र्या ततो योगं रूपाब्दगुणयुक्तया ।
कृत्वाचार्योऽत्र संविश्य ज्ञानावेशं प्रकल्पयेत् ॥ 353 ॥

वज्रेण पद्ममास्फोट्य बुद्धान् स्वान्तर्निवेश्य च ।
स्थिरीकृत्य च पद्मस्थान् प्राप्यानुज्ञां कुलाधिपात् ॥ 354 ॥

स्वनामोच्चार्य वज्रात्मा स्फारयेच्चक्रयोगतः ।
वज्राब्जध्वनिभिर्बुद्धानानीय चक्रपार्श्वतः ॥ 355 ॥

विघ्नानुत्सार्य संरक्ष्य दत्त्वार्घं प्रतिपूज्य च ।
संस्तुत्य द्वारिभिर्द्वारकर्म कृत्वात्र[2] साधयेत् ॥ 356 ॥

चक्षुःकायाद्यधिष्ठानसेकपूजादिकल्पिते ।
विज्ञपयेत्सर्वसत्त्वार्थं कुरुध्वं सर्वसिद्धये ॥ 357 ॥

चक्रं संलिख्य सम्यक् प्राक्प्रतिष्ठायास्त्वयं विधिः ।
प्रतिमापुस्तकादीनां पौरुषान्तस्तु सेकतः ॥ 358 ॥

कलशार्घवितानादि रक्षाहोमादि यत्स्मृतम् ।
त्रिपञ्चाक्षर[3]सन्मन्त्रैर्मन्त्रैर्वा प्राक्समुद्धृतैः ॥ 359 ॥

कारयित्वा बहिःस्नानं चक्रवर्तीव तत्स्वयम् ।
उत्तमं तत्त्वमेतद्धि प्रज्ञोपायात्मकं तु यत् ॥ 360 ॥

जलमौली[4] तु निष्यन्दः पाको वज्राधिपाह्वकाः( कः )।
सम्बुद्धैः पौरुषः सेको वैमल्यो गुह्ययोगतः ॥ 361 ॥

---

1. च यत्- भो० ।
2. 'अत्र' नास्ति- भो० ।
3. मन्त्राक्षर- भो० ।
4. जलमाला- भो० ।

ततो रूपादिसम्पन्नां स्वभ्यस्तचक्रयोगिनीम् ।
समयसंवरस्थां तां चक्रे मुद्रामधिष्ठ्य च ॥ 362 ॥

मुनीन्द्रवृन्दं वज्रान्तः समावेश्य च सत्सुखम् ।
प्रपीड्यानामजेष्ठाभ्यां शिष्यवक्त्रे प्रपातयेत् ॥ 363 ॥

शिष्यो दृढमतिः सर्वं पिबेद्वैरोचनात्मना ।
स भवेद्विश्ववद् विश्वोऽत्रा( त्य )हो सुखेति वाग्ब्रुवन् ॥ 364 ॥

प्रज्ञासम्पर्कतः श्रीमान् तत्त्वं समुपलक्षयेत् ।
इयं ते धारणी रम्या सेव्या बुद्धैः प्रकल्पिता ॥ 365 ॥

चक्रक्रमप्रयोगेण समास्वादय सत्सुखम् ।
वज्रपर्यङ्कतश्चित्तं मण्यन्तर्गतमीक्षयन् ॥ 366 ॥

मण्डलं देवतातत्त्वमाचार्यपरिकर्म च ।
संकथ्य गुह्यप्रज्ञाभ्यां[1] सिक्त्वा तत्त्वं समुद्दिशेत् ॥ 367 ॥

यदाह—

न तथा बोधिचर्याद्यैरन्यै[2]र्वापि नयैः शुभैः ।
प्राप्यन्ते सर्वबुद्धाद्या यथाभिषेकादितो नयात् ॥ 368 ॥

समयं रक्षयेद्धर्तुः संवरं पालयेत्सदा ।
पञ्चमांसामृतां( तं ) भक्ष्यं रक्षो( क्ष्यो )ऽन्यः समयोऽप्यतः ॥ 369 ॥

रत्नघ्नघातसर्वस्त्रीपरस्वादनं[3] वाङ्मृषा ।
एतद्धि विधिवद्रक्ष्यं योगतन्त्रे च यत्स्मृतम् ॥ 370 ॥

ततस्तथागतो भूत्वा व्याकुर्यादुद्ग( गी )तयानया ।
हृन्मुष्टिचीवरा वामा दक्षिणा तु वरप्रदा ॥ 371 ॥

ॐ एषोऽहं व्याकरोमि त्वां[4] वज्रसत्त्वस्तथागतः ।
भवदुर्गतितोद्धृत्यात्यन्तभवसिद्धये ॥ 372 ॥

---

1. प्रगुह्यवरप्रज्ञाभ्याम्- भो० ।
2. ०चर्यान्यैः- भो० ।
3. ०स्वादो न- भो० ।
4. 'त्वां'-नास्ति- भो० ।

हे वज्र नाम[1] तथागत सिद्धये[2] भूर्भुवः स्वः।

व्याक्रियते[3]ऽनया यस्तु[4] मन्त्री सर्वजगत्पतिः ।
बोधावनुत्तरायां हि व्याकुर्यात्सुगतैरपि ॥ 373 ॥

यथा यथा हि विनयं सत्त्वा यान्ति स्वभावतः ।
तथा तथा हि सत्त्वार्थं कुर्याद्रागादिभिः शुचिः ॥ 374 ॥

प्रतिदिनं चतुःसन्ध्यं समाधित्रययोगवान् ।
भूत्वा साधय[5] संसिद्धिं सामान्येतरभावनीम् ॥ 375 ॥

अन्तर्द्धिर्धातुसाहस्रे द्विसाहस्रेष्वभिज्ञकः ।
विद्याधरस्त्रिसाहस्रे वज्री सर्वजगत्पतिः ॥ 376 ॥

शान्तिपुष्ट्यादि यत्कर्म तदन्यद्वा यदीप्सितम् ।
चक्रानुरागयोगेन साधयन् सिध्यते लघु ॥ 377 ॥

तदुक्तम्— वज्राधिपतयः सर्वे रागतत्त्वार्थचिन्तकाः ।
कुर्वन्ति रागजां बोधिं सर्वसत्त्वहितैषिणीम् ॥ 378 ॥

अतो बोध्यर्थिको मन्त्री[6] कायवाक्चित्तचेष्टितम् ।
कर्म कुर्याद्विधानेन सर्वं तद्बोधये मतम्[7] ॥ 379 ॥

यथा प्रविष्टशिष्येभ्योऽनुशंसार्थिभ्य इत्यपि ।
समाश्वासं त्रिसमयमतो[8] दद्याद्विधानतः ॥ 380 ॥

दृष्ट्वा प्रविष्ट्वा[9] परमं रहस्योत्तममण्डलम् ।
सर्वपापैर्विनिर्मुक्ता भवन्तोऽद्यैव सुस्थिताः[10] ॥ 381 ॥

---

1. वज्र अमुक नाम- भो०।
2. सिद्धि- भो०।
3. अभिषिच्यते- भो०।
4. 'यस्तु' नास्ति- भो०।
5. साधयेत्- भो०।
6. 'मन्त्री' नास्ति- भो०।
7. सर्वं बोधिकामतः- भो०।
8. त्रिसमयं यतः- भो०।
9. 'इदम्' इत्यधिकम्- भो०।
10. ०तत्त्वसुस्थिताः- भो०।

न भूयो मरणं वोऽस्ति यानादस्मान्महासुखात् ।
अधृष्याश्चाप्यबद्धा( ध्या )[1]श्च रमध्वमकुतोभयाः ॥ 382 ॥

निवृतं भवदुःखं वोऽत्यन्तभवशुद्धये ।
संभूताः शासिनामग्रा अत्यन्तभवसिद्धये ॥ 383 ॥

अयं वः सततं रक्षः( क्ष्यः ) सिद्धः समयसंवरः ।
सर्वबुद्धैः समं प्रोक्ताज्ञा परमशाश्वती ॥ 384 ॥

बोधिचित्तं न वै त्याज्यं यद्वज्रमिति मुद्रया ।
यस्योत्पादनमात्रेण बुद्ध एव न संशयः ॥ 385 ॥

सद्धर्मो न प्रतिक्षेप्यो न च त्याज्यः कदाचन ।
अज्ञानाद्वाथ मोहाद्वा न वै विवृणुयात् स तु[2] ॥ 386 ॥

स्वमात्मानं परित्याज्य तपोभिर्न च पीडयेत् ।
यथासुखं सुखं धार्यः संबुद्धोऽयमनागतः ॥ 387 ॥

वज्रं घण्टा च मुद्रा च न वै त्याज्या कदाचन ।
आचार्यो नावमन्तव्यः[3] सर्वबुद्धसमो ह्यसौ ॥ 388 ॥

यो चावमन्येताचार्यं सर्वबुद्धसमं गुरुम् ।
सर्वबुद्धापमानेन स नित्यं दुःखमाप्नुयात् ॥ 389 ॥

ज्वरैर्गैर्विषै रोगैर्डाकिन्युपद्रवैर्ग्रहैः ।
विघ्नैर्विनायकैर्घोरैर्मारितो[4] नरकं व्रजेत् ॥ 390 ॥

तस्मात् सर्वप्रयत्नेन वज्राचार्यं महागुरुम्[5] ।
प्रच्छन्नवरकल्याणं नावमन्येत् कदाचन ॥ 391 ॥

अनुरूपं च ते देयं गुरुभक्तं[6] सदक्षिणम् ।
ततो ज्वरादयस्तापा न भूयः प्रभवन्ति हि ॥ 392 ॥

---

1. अवध्याः- भो० ।
2. वर्ण्यो महानयः- भो० ।
3. न त्याज्यः- भो० ।
4. 'सत्त्वः' इत्यधिकम्- भो० ।
5. महामतिम्- भो० ।
6. गुरुभक्त्या- भो० ।

नित्यं स्वसमयः साध्यो[1] नित्यं पूज्यास्तथागताः ।
नित्यं च गुरवे देयं सर्वबुद्धसमो ह्यसौ ॥ 393 ॥

तद् दानात् पुण्यसंभारः सम्भाराद्बोधिरुत्तमा ।
दत्तेऽस्मै सर्वबुद्धेभ्यो दत्तं भवति शाश्वतम् ॥ 394 ॥[2]

अद्य वः सफलं जन्म यदस्मिन् सुप्रतिष्ठिताः ।
समाः समयदेवानां भवितास्थ न संशयः ॥ 395 ॥

अद्याभिषिक्ता आयुष्मन्तः सर्वबुद्धैः सवज्रिभिः ।
त्रैधातुकमहाराज्यं( जाः ) राजाधिपतयः स्थिराः ॥ 396 ॥

अद्य मारान् विनिर्जित्य प्रविष्टाः परमं पुरम् ।
प्राप्तमद्यैव बुद्धत्वं भवद्भिर्नात्र संशयः ॥ 397 ॥

इति कुरुत मनः प्रसादवज्रं
स्वसमयमक्षयसौख्यदं भजध्वम् ।
जगति लघुसुखेऽद्य वज्रसत्त्व-
प्रतिसमशाश्वततां गता भवन्तः ॥ 398 ॥

प्रणिपत्य गुरोः पादौ शिष्याः सद्भक्तिवत्सलाः ।
ब्रूयुरेवं करिष्यामो यथाज्ञापयसे विभो ॥ 399 ॥

सत्येव संभवे तेषां प्रत्येकं वामपाणिना ।
सव्याङ्गुष्ठकमागृह्य शान्तिं कुर्याद् विधानतः ॥ 400 ॥

त्रिसप्ताहुतिमेकां वा राज्ञो वा भूपतेरथ ।
दिक्पालस्वात्मशान्तौ च हुत्वा याचेत्( त ) दक्षिणाम् ॥ 401 ॥

सर्वसत्त्वार्थकर्तव्ये श्रुतादौ वा प्रति प्रति ।
भूगजादि[3] सुवर्णादौ स्वसिद्धौ वा सहायताम् ॥ 402 ॥

---

1. रक्ष्यः- भो० ।
2. द्र०-गुरुपञ्चाशिका- श्लो० 10-21
3. भूराज्यादि- भो० ।

संगृह्य यत्तदुत्सृष्टं संतोष्य दत्तदक्षिणान् ।
सर्वाहारविहारैस्तैः[1] स्वपरैश्चक्रमर्चयेत् ॥ 403 ॥

संगृह्य योग्यसच्छिष्यान् विचित्रपरमायुभिः ।
सन्तर्प्य चोपसंहृत्य मुःकारान्तैश्च त्र्यक्षरैः ॥ 404 ॥

अकारेत्यादि मन्त्रेण शून्यवच्चक्रमुत्तमम् ।
दत्त्वार्थिने रजः स्तोकं महत्तोये रजः सृजेत् ॥ 405 ॥

गर्त्तापूरे प्रतिष्ठायां होमे चक्रे च यद्धनम् ।
आचार्यस्यैव तत्सर्वमित्याह वरवज्रधृक् ॥ 406 ॥

इत्यादिकर्मिकस्यायमुक्तश्चक्रविधिः स्फुटः ।
ज्ञानावेशसुलब्धः सत्त्वावेशेनैव कथ्यते ॥ 407 ॥

द्वादशाब्दे समावेश्य संपूज्य बालबालिके ।
ताभ्यां यद्रचयेच्चक्रं चित्तवाक्कायिकं मतम्[2] ॥ 408 ॥

चित्ते त्वक्षोभ्यमामक्योरादे( वे )शः समुदाहृतः ।
पाण्डरामितयोर्वाचि काये श[ा]श्वतलोचने ॥ 409 ॥

चित्तवाक्कायसंस्तोभाद्रचना त्वियमद्भुता ।
चित्तस्तोभात् परिज्ञानं वाक्स्तोभान्मन्त्रभाषणम् ॥ 410 ॥

कायस्तोभाच्च खे स्थानं स्तोभावेशे विधिस्त्वयम् ।
आचार्यशिष्यसेकोऽत्र प्राङ्न्यायेनैव संस्थितः ॥ 411 ॥

प्राप्तज्ञानवशी कुर्याच्चेतसैव त्रिचक्रकम् ।
तदधिष्ठानतश्चक्रं दृश्यते स्वपरैर्यतः[3] ॥ 412 ॥

प्रवेशोऽत्राभ्यनुज्ञातः स्पष्टस्वप्नवदिष्यते[4] ।
यतस्तेनोत्तमो ज्ञेयश्चित्तम( वृ )त्तिदृढत्वतः ॥ 413 ॥

---

1. 'तैः' नास्ति- भो० ।
2. 'चित्त...मतम्' नास्ति- भो० ।
3. शुद्धस्वरूपे- भो० ।
4. दृश्यते- भो० ।

त्रियोगिनामपि प्राग्वद् विधिर्वाक्कायचक्रयोः ।
तत्स्थानेऽक्षोभ्यचिह्नं स्याद्वाक्कायगुह्यशुद्धये ॥ 414 ॥

ज्ञानादिकर्मिसंलेशिसंप्राप्तवशिनामपि ।
चेतसैव विधिः सर्वस्तद्धीनो नैव सिध्यति ॥ 415 ॥

वज्राचार्याग्रशिष्याणां निष्यन्दादिरतात्मनाम् ।
मनसोक्तो विधिः श्रेष्ठो वाङ्मात्रेणात्र किं भवेत् ॥ 416 ॥

वृत्तमात्रान्न बुद्धत्वं श्रुतमात्राच्च नो भवेत् ।
चिन्तयापि न[1] यावच्च भावनातो निरुध्यते ॥ 417 ॥

यदाह—

अलं बहुविसर्पिण्या कथया मन्त्रवादिनाम् ।
चेतः साध्यं विशेषेण चित्तात् संबोधिसम्भवः ॥ 418 ॥

यदुक्तम्—

यत्फलं बोधिचित्तं तद्बुद्धज्ञानमनुत्तरम् ।
वज्रसत्त्वमयं तस्य धर्मसंभोगनिर्मितम् ॥ 419 ॥ इति ।

प्राकृतकल्पनाऽवृत्तेर्नान्यद् दुःखं भवात्मकम् ।
साक्षादस्य विरोध्येवं[2] प्रज्ञोपायात्म[3][ कं मनः ] ॥ 420 ॥

[ आचार्यदीपङ्करभद्ररचितो गुह्यसमाजमण्डलविधिः समाप्तः ]



1. 'न' नास्ति- भो० ।
2. निरोधि- भो० ।
3. संस्कृतमातृकाया अन्तिमं पत्रं नोपलभ्यते, भोटानुसारेण अधिकैः षोडशश्लोकैः ग्रन्थोऽयं सम्पूर्णतामेति ।

**आदर्श प्रति**

धारण्यादिसंग्रह

राष्ट्रीय अभिलेखालय काठमाण्डू, नेपाल।

| | | |
|---|---|---|
| **सं०** | - | 3/589 |
| **पत्र संख्या** | - | 148a–148b |
| **लिपि** | - | देवनागरी |
| **भो०** | - | འཕགས་མ་འོད་ཟེར་ཅན་ཞེས་བྱ་བའི་གཟུངས། (तो० 564) |

# आर्यमारीची-नाम-धारणी

ॐ नमो भगवत्यै आर्यमारीचीदेवतायै[1]।

एवं मया श्रुतमेकस्मिन् समये भगवान् श्रावस्त्यां विहरति स्म। जेतवने अनाथपिण्डदस्यारामे महता भिक्षुसङ्घेन सार्द्धत्रयोदशभिक्षुशतैः सम्बहुलैश्च महाश्रावक[2]बोधिसत्त्वमहासत्त्वैः। तत्र खलु भगवान् भिक्षूनामन्त्रयते स्म। अस्ति भिक्षवो मारीची नाम देवता सा सूर्यचन्द्रमसोः पुरतोऽनूपगच्छति। सा न दृश्यते, न गृह्यते, न बध्यते, न निरुध्यते[3], न विरुध्यते, न मुष्यते[4], न मुह्यते, न दण्ड्यते, न मुण्ड्यते, [5]न दह्यते, न शत्रोरनूपगच्छति। योऽपि तस्य भिक्षवो मारीचीनामदेवताया नाम जानाति सोऽपि न दृश्यते न गृह्यते न बध्यते न निरुध्यते[6], न विरुध्यते न मुष्यते[7] न मुह्यते न दण्ड्यते न मुण्ड्यते [8]न दह्यते न शत्रोरनूपगच्छति। सोऽहं भिक्षवो मारीचीनामदेवताया नाम जानामि। अहमपि (अयमपि) न दृश्यते न बध्यते न निरुध्यते न विरुध्यते[9] न मुह्यते न दण्ड्यते न मुण्ड्यते [10]न दह्यते न शत्रोरनूपगच्छति। इमानि मन्त्रपदानि भवन्ति। तद्यथा—ॐ पदाक्रमसि पराक्रमसि उदयमसि नैरमसि[11] अर्कमसि मर्कमसि उर्म्मसि वनमसि गुल्ममसि चीवरमसि महाचीवरमसि अन्तर्धानमसि स्वाहा।

ॐ मारीचीदेवते पथे मां गोपय। उत्पथे मां गोपय। पुरुषभयतो मां गोपय[12]। राजभयतो मां गोपय। हस्तिभयतो मां गोपय। चौरभयतो मां गोपय। नागभयतो मां गोपय[13]। सिंहभयतो मां गोपय। व्याघ्रभयतो मां गोपय। अश्वभयतो मां गोपय[14]।

---

1. नमो सर्वबुद्धबोधिसत्त्वेभ्यः - भो०।
2. 'महाश्रावक' - नास्ति भो०।
3. 'न निरुध्यते' - संस्कृतपाठे नास्ति।
4. 'न मुष्यते' - भोटपाठे नास्ति।
5. 'न द्रव्यते' - भो० अधिकपाठः।
6. 'न निरुध्यते' - संस्कृतपाठे नास्ति।
7. 'न मुष्यते - भोटपाठे नास्ति।
8. 'न द्रव्यते' - भोटपाठे अधिकः।
9. 'न मुष्यते' - संस्कृतपाठे, गृहीतस्तु भोटानुसारी।
10. 'न द्रव्यते' - भोटपाठे अधिकः।
11. वैरमसि - संस्कृतपाठे, गृहीतस्तु भोटानुसारी।
12. 'पुरुषभयतो मां गोपय' - संस्कृतपाठे नास्ति।
13. 'नागभयतो मां गोपय' - संस्कृतपाठे नास्ति।
14. 'अश्वभयतो मां गोपय' - भोटपाठे नास्ति।

अग्निभयतो मां गोपय। उदकभयतो मां गोपय। सर्पभयतो मां गोपय[1]। विषभयतो मां गोपय[2]। सर्वप्रत्यर्थिकप्रत्यमित्रभयतो मां गोपय। आकुलेषु मां गोपय। अनाकुलेषु मां गोपय। मूर्च्छितेषु मां गोपय। अमूर्च्छितेषु मां गोपय। नागतो मे रक्ष। चण्डमृगतो मे रक्ष। रक्ष-2 मम सर्वसत्त्वानां च सर्वदुष्टप्रदुष्टेभ्यः[3]। तद्यथा—नमो रत्नत्रयाय[4] ॐ आलो तालो कालो सच्छलो सत्त्वमुद्रति[5] रक्ष रक्ष मां सपरिवारस्य[6] सर्वसत्त्वानां च सर्वभयोपद्रवेभ्यः स्वाहा।

नमो रत्नत्रयाय। नमो भगवत्यै आर्यमारीचीदेवतायै। तस्या हृदयमावर्त्तयिष्यामि। तद्यथा—ॐ वत्ताली वदाली वराली वराहमुखी। सर्वदुष्टप्रदुष्टानां चक्षुर्मुखं बन्ध बन्ध। [7]बन्ध मुखं जम्भय स्तम्भय मोहय स्वाहा। ॐ मारीच्यै स्वाहा। ॐ वराली वदाली वत्ताली वराहमुखी सर्वदुष्टप्रदुष्टानां चक्षुर्मुखं बन्ध बन्ध[8] जम्भय जम्भय स्तम्भय स्तम्भय मोहय मोहय भञ्जय भञ्जय तर्जय तर्जय ह्रीं ह्रीं हूँ हूँ फट्[9] स्वाहा। ॐ मारीच्यै सर सर मुह्य मुह्य विमुह्य विमुह्य अपक्राम्य अपक्राम्य सर्वदुष्टसत्त्वान् पथे उत्पथे सर्वविघ्नविनायका अपसरन्तु मा तिष्ठन्तु त्रिरत्नसत्येन स्वाहा। ॐ चण्ड परमचण्ड स्वाहा। ॐ अगलि पगलि पञ्चगलि सर्वदुष्टप्रदुष्टानां कायवाक्चित्तं मुखं चक्षुषि बन्ध बन्ध हूँ हूँ हूँ फट् फट् फट् स्वाहा।

इदमवोचद्भगवानात्तमनास्ते च भिक्षवस्ते च बोधिसत्त्वाः सा च सर्वावती पर्षत् सदेवमानुषासुरगरुडगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति।

## ॥ आर्यमारीची नाम धारणी समाप्ता ॥



---

1. 'सर्प......गोपय' - संस्कृतपाठे नास्ति।
2. 'विष.....गोपय' - संस्कृतपाठे नास्ति।
3. ''आकुलेषु......प्रदुष्टेभ्यः'' इत्यस्य स्थाने ''आकुलेष्वनाकुलेषु सर्वोपहतानुपहतेभ्यो मां सिंहतो रक्ष व्याघ्रतो मां रक्ष नागतो मां रक्ष सर्पतो मां रक्ष। मां सर्वभयदुष्टोपसर्गाकुलेषु रक्ष रक्ष''-भो०।
4. नमो रत्नत्रयाय - गृहीतस्तु भोटानुसारी।
5. सममूर्धिति-भो०।
6. 'सपरिवारस्य'-भो० नास्ति।
7. 'कायवाक्चित्तं' - संस्कृतपाठे अधिकं वर्तते।
8. जम्भ जम्भ स्तम्भ स्तम्भ हुँ हुँ स्वाहा - संस्कृतपाठे।
9. ''जम्भय.......फट् फट् फट्'' नास्ति भो०।

## ABSTRACTS OF ARTICLES

*Stotras* *1-4*

The first two stotras, reproduced in this issue, are from the 23rd *Pariccheda* of the Lalitavistara. In these stotras, the Tathāgata is praised by the sons of the Ābhāsvara and the Brahmakāyika gods. The third stotra is from the Samādhirājasūtra (Darbhanga edition, Appendix-1). According to the editor, this stotra is found in two of the MSS at the beginning of the text and is therefore reproduced accordingly.

*Bhūtaḍāmaratantra : A Brief Introduction* *5-18*

In the previous issue of Dhīḥ, the first part of this article, introducing the contents of the Bhūtaḍāmara Tantra Paṭalas I-IV, was published. The second part of the article, introducing the contents of the remaining Paṭalas, is being published here.

*Understanding the Concept— "the Buddhahood in this Very Life"* *19-26*

According to the Buddhist tradition, the highest goal of human life is the attainment of the Buddhahood or Nirvāṇa. According to the way of Pāramitā, it takes innumerable *kalpas* to attain this goal. On the other hand, according to the Buddhist Tantras, the Buddhahood can be attained in a single life-time. The present paper reviews the concept of 'the single life-time'. The paper explains that, according to the Buddhist Tantras, the concept of 'the single life-time' points to the human life and not to the other destinies such as that of gods etc. It also includes the notion that the beings can attain the Buddhahood within a span of one life-time to seven or sixteen lives. The duration of time depends upon the category of beings- those of week faculties, of middling faculties and of keen faculties.

*Paramakṣetradvārodghāṭana-nāmaka-sukhāvatī-kṣetra-janmagrahaṇa-praṇidhāna* *27-36*

"The Concise Praṇidhāna" of Acharya Tsoṅkhāpa is a part of his elaborate treatise "Bde-ba can du skye ba hdsin pahi smon-lam shiṅ mchog sgo hbyed". The work describes the Sattvaloka and the Bhājanaloka of the Sukhāvatī, the abode of Amitābha Buddha and his characteristic qualities beyond one's imagination. It describes in detail the thirty-four Praṇidhānas, instrumental in one's birth in that Pure Land through the firm faith in those qualities. The present article includes an edition of the text of Praṇidhāna, with its translation and a brief introduction.

*बौद्धतन्त्र विषयक पाठ समीक्षात्मक टिप्पणियाँ* *37-44*

प्रस्तुत निबन्ध में बौद्धतन्त्र ग्रन्थों के कुछ अंशों के पाठगत समस्याओं की चर्चा की गयी है : हेवज्रतन्त्र 2.3.54, गुह्यसमाजतन्त्र के चौदहवें पटल में प्राप्त अचल का मालामन्त्र (मात्सुनागा संस्करण, पृ० 65) और सेकोद्देशटीका का मंगलाचरण। इनके पाण्डुलिपियों में प्राप्त तथा सम्पादित संस्करणों में स्वीकृत पाठों का भोटानुवाद से यथासम्भव तुलनात्मक अध्ययन कर अधिक उपयुक्त एवं विश्वसनीय पाठ प्रस्तुत करने का प्रयास किया गया है।

*Praṇava in the Prapañcasāra Tantra* *45-58*

The Prapañcasāra Tantra is ascribed to Ācārya Śaṅkara who was a devout practitioner of Śrīvidyā and a great Siddha. The nineteenth chapter of this work deals with the praṇava mantra, its *japa, upāsanā,* the way of its worship and fruit. *Praṇava* is *oṁkāra*, consisting of the three letters, *a, u* and *m* and is the best name of God. Being the foremost of the Vedas, it is uttered in the beginning of on the Vedic mantras. It is the origin or the cause of everything, the Brahman. The *japa*, or worship of *praṇava* brings various *siddhis* to the practitioner. These *siddhis* called as 'the eight aiśvaryas' are : aṇimā, laghimā, mahimā, garimā, prāpti, prākāmya, vaśitva and īśitva. Having attained these *siddhis*, the practitioner attains the state of *jīvanmukta*

and, while experiencing the bliss, continues to live in the saṁsāra, until the end of the *prārabdha karma.* After that, casting away the corporal body, attains the divine abode of Viṣṇu.

*Sources of Rare Buddhist Texts* *59-82*

Under this title, in the previous issue of Dhīḥ, notices of 84 important manuscripts were given. This issue includes the information about 94 other manuscripts.

*Various Forms of the Five Protection Deities* *83-94*

The present article describes the various forms etc. of the Five Protection Deities : Mahāpratisarā, Mahāmāyūrī, Mahāsahasrapramardinī, Mahāśītavatī and Mahāmantrānusāriṇī. The recitation of the Dhāraṇī-mantras of these deities frees one from various diseases, dangers and evil spirits and yields wealth and prosperity.

*Dīkṣā : Initiation in Buddhist and Non-Buddhist Systems* *95-98*

The previous issues of Dhīḥ have articles on the following topics : The Vaidika Dīkṣā (*upanayana*), the Jaina and the Buddhist, the Vaiṣṇava, the Śaiva, the Śākta and the Saura Dīkṣā. The present article is a brief introduction to the Gāṇapatya Dīkṣā in the tradition of the Vaidika Dīkṣā.

*General and Concise Arrangement of Tantra* *99-108*

A Hindi translation of Ācārya Bu-ston's work "A General and Concise Presentation of Tantra : A Key Opening the Door of the Treasure of Jewels" is being published in this journal in a series of articles. The present part deals with the explanation of the meanings of the Anuttarayoga Tantra with its four subdivisions. This part is a translation of the sub-title : The three divisions of Tantras : Prajñātantra, Upāyatantra and Advayatantra, from the point of view of *neyārtha* and the explanation of Advayatantra from the point of view of *nītārtha.*

*Śrīguhyasamājamaṇḍalavidhi* *109-154*

*Śrīguhyasamājamaṇḍalavidhi* of Ācārya Dīpaṅkarabhadra is a treatise composed in elegant and lucid Sanskrit. A copy of a MS of this work had become available to us. The last folio of the MS is missing. From its Tibetan translation, it appears that the last 16 verses are missing in the MS. Realizing its importance, we are publishing here a critically edited Sanskrit text compared with its Tibetan translation. A complete Sanskrit text with the restoration of the missing portion will be published in due course along with its Tibetan translation.

*Ārya-Mārīcī-Nāma-Dhāraṇī* *155-158*

A number of copies of this Dhāraṇī are available among the collections of Dhāraṇīs from Nepal. This Dhāraṇī, composed in a Sūtra style, is from the *Dhāraṇyādisaṁgraha* (No. 3/589). It is being published here edited with the help of its Tibetan translation.

•

# ཕྱོགས་ཀྱི་ངོ་སྤྲོད་མདོར་བསྡུས།

## དེ་བཞིན་གཤེགས་པའི་བསྟོད་པ་ཁག་གསུམ། ༡ - ༨

དུས་རབས་འདོན་ཐེངས་འདིའི་ནང་གི་བསྟོད་པ་སྔ་མ་གཉིས་ནི། མདོ་རྒྱ་ཆེར་རོལ་པའི་ལེའུ་ཉེར་གསུམ་པ་མངོན་པར་བསྟོད་པའི་ལེའུའི་ནང་གསལ་བའི་འོད་གསལ་གྱི་ལྷའི་བུ་རྣམས་དང་། ལྷའི་བུ་རབ་ཚངས་པ་ལ་སོགས་པ་ཚངས་རིས་ཀྱི་ལྷའི་བུ་རྣམས་ཀྱིས་དེ་བཞིན་གཤེགས་པ་ལ་བསྟོད་པ་མཛད་ཡོད་པ་དེ་དག་དེ་བཞིན་གཤེགས་པའི་བསྟོད་པ་ཞེས་པའི་འགོ་བརྗོད་འོག་བཀོད་ཡོད། བསྟོད་པ་གསུམ་པ་ཟླ་བ་སྒྲོན་མེའི་མདོའི་བསྟོད་པ་དེ་ནི། ཧིང་དེ་འཛིན་རྒྱལ་པོའི་མདོ་དར་ཟླའི་དཔེ་སྐྲུན་ཁང་ནས་དཔར་བསྐྲུན་ཞུས་པ་དེའི་ལྷན་ཐབས་དང་པོ་ལས་བླངས་པ་ཞིག་ཡིན། ཞུས་སྒྲིག་པའི་བཞེད་པ་ལྟར་ན་མདོ་དེའི་རྩ་བའི་མ་དཔེ་ཁག་གཉིས་ཀྱི་ནང་བསྟོད་པ་འདི་མདོའི་དབུར་བཀོད་ཡོད་པའི་རྐྱེན་གྱིས་བསྟོད་པ་འདི་གཞུང་གི་ཐོག་མར་བཞག་ཡོད།

## འབྱུང་པོ་འདུལ་བ་ཞེས་བྱ་བའི་རྒྱུད་ཀྱི་ངོ་སྤྲོད་མདོར་བསྡུས། ༤ - ༡༥

༄༅ཿདུས་རབས་སྔ་མའི་ནང་འགོ་བརྗོད་འདིའི་འོག་འབྱུང་པོ་འདུལ་བ་ཞེས་བྱ་བའི་རྒྱུད་ཀྱི་རྒྱལ་པོ་ཆེན་པོ་ཞེས་པའི་གཞུང་དེའི་ལེའུ་དང་པོ་ནས་བཞི་པ་བར་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས་ཤིག་བསྟན་ཟིན། འདོན་ཐེངས་འདིར་སྔ་མའི་འཕྲོ་མཐུད་དེ་ལེའུ་ལྷག་མ་རྣམས་སུ་གསལ་བའི་བརྗོད་བྱའི་ངོ་སྤྲོད་འདིར་བཀོད་ཡོད།

## ཚེ་གཅིག་ལ་སངས་རྒྱས་འཐོབ་ཅེས་པའི་བཞེད་དོན་ལ་དཔྱད་ཞིབ། ༡༧ - ༢༦

ནང་པའི་ཆོས་ལུགས་ལྟར་ན་འཐོབ་བྱ་མཐར་ཐུག་ནི་སངས་རྒྱས་སམ་མྱང་འདས་ཀྱི་གོ་འཕང་དེ་ཡིན། ཕར་ཕྱིན་ཐེག་པའི་ལུགས་ལ་དེ་ལྟ་བུའི་གོ་འཕང་དེ་ཐོབ་པར་བསྐལ་པ་གྲངས་མེད་མང་པོའི་བར་ཚོགས་བསགས་དགོས་ཤིང་དེ་རྫོགས་ན་འབྲས་བུ་དེ་མངོན་དུ་གྱུར་ཞིང་དེ་ཉིད་ནང་པའི་སྔགས་ཀྱི་ཐེག་པར་ནི་ཚེ་གཅིག་གམ་ལུས་རྟེན་འདི་ཉིད་ལ་ཐོབ་ཐུབ་པར་གསུངས་ཡོད་པས། ཆེད་

རྩོམ་འདིའི་ནང་ནང་པའི་རྒྱུད་གཞུང་དུ་གསལ་བའི་ཚེ་གཅིག་ཉིད་ལ་ཞེས་པའི་བཞེད་དོན་ལ་དཔྱད་ཞིབ་བཀོད་ཡོད། དེའི་དགོངས་དོན་ནང་པའི་རྒྱུད་གཞུང་རྣམས་སུ་མིའི་སྐྱེ་བ་གཅིག་ཉིད་ལ་ཞེས་པ་ཡིན་པ་ལས། གཞན་ལྷ་ལ་སོགས་པའི་འགྲོ་བ་རྣམས་ཀྱི་སྐྱེ་བའམ་ཚེ་གཅིག་གི་དོན་ནི་མིན་ནོ།། ཚེ་གཅིག་ཉིད་ལ་ཞེས་པའི་གོ་དོན་གཞན་ཡང་ཡོད་དེ། འཐོབ་བྱ་སངས་རྒྱས་ཀྱི་གོ་འཕང་དེ་སྒྲུབ་པ་པོས་མི་ཚེ་གཅིག་ནས་བཟུང་ཚེ་བདུན་ནམ་བཅུ་དྲུག་བར་ལ་ཐོབ་པར་བྱེད་པ་ལ་ཡང་གོ་ཆོག་ཅིང་། སངས་རྒྱས་ཀྱི་གོ་འཕང་འཐོབ་རྒྱུ་དེ་ཡང་གཙོ་བོ་སྒྲུབ་པ་པོའི་དབང་པོ་རྣོ་རྟུལ་ལ་རགས་ལས་པ་ཡིན་ནོ།།

བདེ་བ་ཅན་དུ་སྐྱེ་བ་འདཛིན་པའི་སྨོན་ལམ་ཞིང་མཆོག་སྒོ་འབྱེད། ༢༧ - ༣༦

རྗེ་ཙོང་ཁ་པ་ཆེན་པོས་མཛད་པའི་གྲགས་ཆེ་ཞིང་བྱིན་རླབས་ཀྱི་མཚན་ཁ་ཤིན་ཏུ་ཆེ་བའི་བདེ་སྨོན་བསྡུས་པ་འདི་རྗེ་ཉིད་ཀྱིས་མཛད་པའི་བདེ་བ་ཅན་དུ་སྐྱེ་བ་འདཛིན་པའི་སྨོན་ལམ་ཞིང་མཆོག་སྒོ་འབྱེད་ཅེས་བྱ་བའི་གཞུང་རྒྱས་པ་དེའི་ཆ་ཤས་གོང་འོག་ཅི་རིགས་ལས་ནུར་འདོན་མཛད་པ་ཞིག་སྟེ། དེ་ཡང་ལྷ་ལྡན་སྨོན་ལམ་ཆེན་མོའི་འདོན་ཆོག་ཁྲིགས་སུ་བསྡེབས་པའི་ཚེ་དམིགས་བསལ་གྱི་དགོས་གལ་གཟིགས་ནས་རྗེ་ཉིད་ཀྱིས་གཞུང་རྒྱས་པ་དེ་ལས་དངོས་སུ་ནུར་འདོན་གྱིས་གཏན་འབེབས་མཛད་པ་ཞིག་ཡིན།

གཞུང་དེར་རྒྱལ་བ་འོད་དཔག་མེད་ཀྱི་ཞིང་ཁམས་བདེ་བ་ཅན་གྱི་སྣོད་བཅུད་ཀྱི་བཀོད་པ་དང་། དེ་དག་གི་ཡོན་ཏན་བསམ་གྱིས་མི་ཁྱབ་པ་དག་རྒྱས་པར་བསྟན་པའི་སྒོ་ནས་བླ་ན་མེད་པའི་ཞིང་དེར་མྱུར་དུ་སྐྱེ་བ་སོགས་ཀྱི་ཕྱིར་འདུན་པ་དྲག་པོས་སྨོན་པའི་གནས་ཁྱད་པར་ཅན་སུམ་ཅུ་སོ་བཞིའི་སྒོ་ནས་སྨོན་ལམ་འདེབས་ཚུལ་སྐོར་བཅས་བསྟན་ཡོད། སྐབས་འབྲེལ་གྱི་གཞུང་བསྡུས་པ་འདིར་སྨོན་ལམ་འདེབས་ཚུལ་གྱི་སྐོར་རྣམས་གཙོ་བོར་བསྟན་པར་མཛད་ཡོད།

གཞུང་འདི་དང་རྒྱལ་བ་བྱམས་པ་མགོན་པོའི་བསྟོད་པ་རིན་པོ་ཆེ་གསལ་བའི་སྒྲོན་མེ་གཉིས་ཐོག་མར་རྩོམ་དགོས་སྐོར་ཡང་རྗེ་བཙུན་འཇམ་དཔལ་དབྱངས་ཀྱི་གསུང་གིས་དངོས་སུ་བསྐུལ་བར

མ་ཟད་དོན་གྱི་ངོ་བོ་དང་གོ་རིམ་སོགས་ཀྱང་ཇེ་བཙུན་གྱིས་གསུངས་པ་ལྟར་ཇེ་རིན་པོ་ཆེས་ཚིག་སྦྱོར་ཚུལ་ལ་མཁས་པའི་ངག་གི་དཔལ་ཕུན་སུམ་ཚོགས་པའི་སྒོ་ནས་བརྩམས་པར་མཛད་པ་ཞིག་ཡིན། ད་ལམ་འདིར་གཞུང་འདི་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་དང་འབྲེལ་ཉམས་ཞིབ་ཀྱི་ལམ་སྲོལ་དང་མཐུན་པའི་ངོ་སྤྲོད་མདོར་བསྡུས་ཀྱིས་བརྒྱན་ཏེ་ རྡེ༔དུས་དེབ་ནང་འདོན་སྤེལ་ཞུས་པ་དགོས།།

## ནང་པའི་རྒྱུད་གཞུང་དང་འབྲེལ་བའི་གཞུང་ཚིག་གི་ཆ་ཤས་ལ་མཚུངས་བསྡུར་དང་མཆན་བཀོད་འགྲེལ་བརྗོད། ༣༧ - ༨༨

ཆེད་རྩོམ་འདིའི་ནང་ནང་པའི་རྒྱུད་གཞུང་ཁག་ཏུ་གསལ་བའི་གཞུང་གི་ཆ་ཤས་རེ་ཟུང་གི་འགྱུར་དང་དཔེར་མ་མི་འདྲ་བའི་ཁྱད་པར་དང་དཀའ་ཚོགས་བཅས་ཀྱི་སྐོར་ལ་གསལ་བཤད་བྱས་ཡོད། དེ་ཡང་། ཀྱཻ་རྡོར་བརྟག་པ་གཉིས་པའི་ལེའུ་གསུམ་པའི་ཤློཀ་ལྔ་བཅུ་ང་བཞི་པ་དང་། སྨྲྀཏིཛྙཱ་ཡིས་ཞུས་བསྒྲིགས་བྱས་པའི་གསང་འདུས་ལེའུ་བཞི་པའི་ནང་ཡོད་མི་གཡོ་བའི་ཕྲེང་བའི་སྔགས་ཀྱི་སྐོར་ཐོག་གྲངས་དྲུག་ཅུ་རེ་ལྔ་པར་གསལ་བ་དེ་དང་། དབང་མདོར་བསྟན་གྱི་འགྲེལ་པའི་མཆོད་བརྗོད་བཅས་ཀྱི་ཤིང་ལོའི་ཐོག་བྲིས་པའི་ལག་བྲིས་རྩ་བའི་མ་དཔེ་ལས་ཐོབ་པ་དང་། དེ་བཞིན་རྒྱུད་གཞུང་ཞུས་བསྒྲིགས་བྱས་ཟིན་ཅིང་ཡོངས་གྲགས་སུ་འདོད་པའི་མ་དཔེ་རྣམས་དང་བོད་འགྱུར་གྱི་གཞུང་དབར་མཚུངས་བསྡུར་ཉམས་ཞིབ་གང་ཐུབ་བྱས་ནས། གང་འོས་ཞིང་འཚམས་ལ་རན་ཞིང་སྐབས་སུ་བབ་ཚབ་ཆེ་བའི་དཔར་མ་ཞིག་འདིར་བཀོད་ཐུབ་རྒྱུའི་འབད་བརྩོན་གང་ཡོད་བྱས་ཡོད།

## སྦྱོར་བའི་སྙིང་པོའི་རྒྱུད་དུ་གསལ་བའི་རབ་བསྡུགས་སམ་ཨོཾ་ཡིག ༨༩ - ༩༦

སྦྱོར་བའི་སྙིང་པོའི་རྒྱུད་ཀྱི་མཛད་པ་པོ་ནི་སློབ་དཔོན་བདེ་བྱེད་ཞེས་པ་དེ་ཡིན། སློབ་དཔོན་འདི་ནི་དཔལ་རིག་མའི་བསྙེན་པ་སྒྲུབ་མཁན་ཆེན་པོ་ཞིག་དང་གྲུབ་ཐོབ་ཆེན་པོ་ཞིག་ཡིན། རྒྱུད་དེའི་ལེའུ་བཅུ་དགུ་པའི་ནང་རབ་བསྡུགས་སམ་ཨོཾ་ཡིག་གི་བརླས་པ། བསྙེན་སྒྲུབ། མཆོད་པའི་ཆོ་ག་དང་འབྲས་བུ་ཐོབ་ཚུལ་སོགས་ཀྱི་སྐོར་ལ་རྒྱས་པར་འགྲེལ་བརྗོད་མཛད་ཡོད། ཨོཾ་ཡིག་དེ་ནི་ཨ

དང་ཨུ་དང་མ་གསུམ་ལས་གྲུབ་ཅིང་ཨོཾ་ཞེས་པའི་མིང་འདི་ཉིད་དབང་ཕྱུག་དམ་པའི་མིང་མཆོག་ཏུ་གྱུར་པ་ཞིག་ཡིན། རབ་བསྟགས་སམ་ཨོཾ་ཞེས་པ་ནི་རིག་བྱེད་ཀྱི་ཐོག་མ་ཡིན་པས་རིག་བྱེད་ཀྱི་སྔགས་ཚང་མའི་ཐོག་མ་ཉིད་དུ་སྦྱོར་གྱི་ཡོད། འདི་ཉིད་སྐྱེས་གནས་ཡིན་ལ། ཚངས་པའང་ཡིན་ལ་ཐམས་ཅད་ཀྱི་རྒྱུ་ཡིན། རབ་བསྟགས་སམ་ཨོཾ་ཡིག་གི་མཆོད་པ་དང་བཟླས་པ་ལ་སོགས་ཆོ་ག་བཞིན་དུ་བྱས་ན་རྣལ་འབྱོར་པའམ་སྒྲུབ་པ་པོ་ལ་དངོས་གྲུབ་ཁྱད་པར་ཅན་འཐོབ་པར་འགྱུར་རོ།། དེ་ནི་འབྱོར་པ་བརྒྱད་ཀྱི་མིང་གི་སྒོ་ནས་ཀུང་གྲགས་ཆེའོ།། དངོས་གྲུབ་བརྒྱད་པོ་ཐོབ་པའི་རྗེས་སུ་རྣལ་འབྱོར་པ་འཁོར་བའི་སྐྱེ་བ་ལས་གྲོལ་ནས་སྟེ་མའི་དགེ་བའི་ལས་ཀྱི་རྣམ་སྨིན་མ་ཟད་ཀྱི་བར་རྟག་ཏུ་བདེ་བའི་རོ་མྱོང་ཞིང་འཁོར་བར་གནས་པར་བྱེད་དོ།། དེ་མཐར་འཁོར་བའི་སྐྱེ་བ་ལས་གྲོལ་ནས་ཁྱབ་འཇུག་གི་གོ་འཕང་མཆོག་ཐོབ་པར་བྱེད་དོ།། དེ་ནི་མིའི་མི་ཚེའི་འཐོབ་བྱ་མཐར་ཐུག་པ་ཡིན་ནོ།།

ཆེས་དཀོན་པའི་གསུང་རབ་ཁག་གི་ཟུ་བའི་མ་དཔེ། ༧༩ - ༨༢

དུས་རེབ་བཞི་བཅུ་ཞེ་གཅིག་པའི་ནང་འགོ་བརྗོད་འདིའི་འོག་གལ་ཆེའི་གསུང་རབ་ལག་བྲིས་བརྒྱད་ཅུ་གྱ་བཞིའི་མཚན་ཐོའི་ངོ་སྤྲོད་བཀོད་ཟིན་ཅིང་། ད་ལན་གྱི་འདོན་ཐེངས་འདིར་སྔར་བཀོད་པ་ལས་གཞན་པའི་གསུང་རབ་ལག་བྲིས་དགུ་བཅུ་གོ་བཞིའི་དཔེ་ཐོའི་ངོ་སྤྲོད་བྱས་པ་བཀོད་ཡོད།

སྐྱུང་བའི་ལྷ་མོ་ལྟའི་རྣམ་པ་ཐ་དད་པའི་སྐོར། ༨༣ - ༩༥

ཆེད་རྩོམ་འདིའི་ནང་སྐྱུང་བའི་ལྷ་མོ་ལྟ་སྟེ་སོ་སོར་འབྲང་མ་ཆེན་མོ། རྨ་བྱ་ཆེན་མོ། སྟོང་ཆེན་མོ་རབ་ཏུ་འཇོམས་མ། བསིལ་བའི་ཚལ་ཆེན་མོ་དང་གསང་སྔགས་ཆེན་མོའི་རྗེས་སུ་འཛིན་མ་བཅས་ཀྱི་རྣམ་པ་མི་འདྲ་བའི་ཚུལ་ལ་གསལ་བཤད་ བྱས་ཡོད། ལྷ་མོ་ལྔ་པོ་རྣམས་ཀྱི་གཟུངས་སྔགས་ཀྱི་བཟླས་པ་བྱས་པས་ནད་ཐམས་ཅད་ཞི་བ་དང་། འཇིགས་པ་དང་གདུག་རྩུབ་ཅན་གྱི་སེམས་ལྡན་སོགས་ཀྱི་གནོད་པ་ལས་ཐར་བར་བྱེད་པ་ཡིན། གཟུངས་སྔགས་འདི་རྣམས་ཀྱི་བཟླས་པ་བྱས་པ་ལས་ནོར་ལོངས་སྤྱོད་དང་ཕུན་སུམ་ཚོགས་པ་ཡང་འཕེལ་བར་བྱེད་དོ།།

### ནང་ཆོས་དང་དེ་ལས་གཞན་པའི་ཆོས་ལུགས་རྣམས་སུ་བསྟན་པའི་སྒོམ་པའི་ངོ་བོ། ༧༣ - ༧༨

ཀྵི༔འདིར་ཐེངས་སྔ་མ་རྣམས་སུ་ནང་པ་དང་གཅེར་བུ་པ། རིག་བྱེད་པའི་སྒོམ་པའི་ནང་ཚན་དུ་ཁྱབ་འཇུག་པ་དང་ཞི་བ་པ་དང་། རིག་བྱེད་པའི་སྒོམ་པའི་ནང་ཚན་ནུས་མ་པ་དང་། སོར་སྒོམ་ཚོགས་ཀྱི་རིམ་པ་རྣམས་བསྟན་ཟིན། འདིར་ཐེངས་འདིར་རིག་བྱེད་པའི་སྒོམ་པའི་ནང་ཚན་ལས་ཚོགས་བདག་པའི་སྒོམ་པའི་ཚོ་གའི་སྐོར་མདོར་བསྡུས་ཏེ་བསྟན་ཡོད།

### བུ་སྟོན་རིན་པོ་ཆེས་མཛད་པའི་རྒྱུད་སྡེ་སྤྱིའི་རྣམ་གཞག་བསྡུས་པ། ༧༩ - ༡༠༨

ཀྵི༔དུས་དེབ་ཀྱི་འདོན་ཐེངས་སྔ་མ་རྣམས་སུ་བོད་ཀྱི་མཁས་དབང་བུ་སྟོན་རིན་པོ་ཆེས་མཛད་པའི་རྒྱུད་སྡེ་སྤྱིའི་རྣམ་གཞག་བསྡུས་པ་རྒྱུད་སྡེ་རིན་པོ་ཆེའི་གཏེར་སྒོ་འབྱེད་པའི་ལྡེ་མིག་ཅེས་པ་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་ཞུས་པའི་རིམ་པ་ལས་འཕྲོས་ཏེ། འདོན་ཐེངས་འདིར་རྣལ་འབྱོར་བླ་མེད་རྒྱུད་ཀྱི་དོན་གཏན་ལ་ཕབ་པ་ཞེས་པར་ནང་གསེས་ཀྱི་བརྗོད་གཞིའི་དབྱེ་བ་བཞི་ཡོད་པ་ལས། དྲང་བའི་དོན་དུ་ཐབས་དང་ཤེས་རབ་དང་གཉིས་མེད་ཀྱི་རྒྱུད་གསུམ་གྱི་དབྱེ་བ་བསྟན་པ་དང་། ངེས་དོན་དུ་ཐམས་ཅད་གཉིས་མེད་ཀྱི་རྒྱུད་དུ་བསྟན་པ་ཞེས་པའི་སྐོར་རྣམས་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་ཞུས་ཏེ་འདིར་བཀོད་ཡོད།

### དཔལ་གསང་བ་འདུས་པའི་དཀྱིལ་འཁོར་གྱི་ཆོ་ག ༡༠༩ - ༡༤༥

དཔལ་གསང་བ་འདུས་པའི་དཀྱིལ་འཁོར་གྱི་ཆོ་ག་ཞེས་པ་སློབ་དཔོན་མར་མེ་མཛད་བཟང་པོས་མཛད་པ་ཡིན། འདི་ནི་ལེགས་སྦྱར་གྱི་སྐད་ཐོག་བཞུགས་ཤིང་རྩོམ་རྩལ་གྱི་ཉམས་རྫོགས་ཤིང་ཕུན་སུམ་ཚོགས་པ་དང་ལྡན་པ་ཞིག་ཡོད། གཞུང་འདིའི་ལེགས་སྦྱར་གྱི་རྩ་བའི་མ་དཔེའི་ཆ་ཤས་ཕྲན་བུ་མ་ཚང་བ་ཞིག་ང་ཚོར་ལག་སོན་བྱུང་། འདིའི་བོད་འགྱུར་དང་མཉམ་མཚུངས་བསྡུར་བྱེད་སྐབས་གཞུང་འདིའི་ཐ་མའི་ཤློ་ཀ་བཅུ་དྲུག་ཙམ་མ་ཚང་བ་མ་གཏོགས་གཞན་ཕལ་ཆེ་བ་ཚང་ཡོད། ལེགས་སྦྱར་གྱི་རྩ་བའི་མ་དཔེའི་ཤོག་ལྷེབ་ཐ་མ་དེ་ཚང་མེད་པར་དཔོག་ཐུབ། གཞུང་གི་གལ་གནད

ལ་གཞིགས་ཏེ་འདིའི་བོད་འགྱུར་ལ་གཞི་བཅོལ་ནས་ཞུས་བསྒྲིགས་བྱས་ཏེ་དུས་དེབ་འདོན་ཐེངས་འདིའི་ནང་དཔར་བསྐྲུན་ཞུས་ཡོད། གཞུང་འདིའི་ཤོག་ལྷེབ་ཐ་མའི་སློ་ཀ་བཅུ་དྲུག་མ་ཚང་བ་རྣམས་བོད་འགྱུར་ལ་གཞི་བྱས་ནས་བསྒྱུར་གསོ་བྱས་ནས་མ་འོངས་པར་དེབ་ཀྱི་གཟུགས་སུ་ལོགས་སུ་དཔར་བསྐྲུན་ཞུ་རྒྱུ་ཡིན།

## འཕགས་མ་འོད་ཟེར་ཅན་མའི་གཟུངས། ༡༤༤ - ༡༤༥

བལ་ཡུལ་ནས་ཐོབ་པའི་གཟུངས་སྔགས་ཕྱོགས་བཏུས་ནང་འཕགས་མ་འོད་ཟེར་ཅན་མའི་གཟུངས་ཞེས་པའི་མ་དཔེ་མང་པོ་ཞིག་ཐོབ་ཀྱི་ཡོད། མདོའི་འགྲོས་ལྟར་དུ་གསལ་བའི་གཟུངས་འདི་ནི་གཟུངས་སྔགས་ཕྱོགས་བཏུས་ (ཨང་གྲངས་ ༣།༤༥༦) ལས་བླངས་པ་ཞིག་ཡིན། བོད་འགྱུར་དཔར་མ་ལ་བརྟེན་ནས་ཞུས་བསྒྲིགས་ཀྱིས་འདོན་ཐེངས་འདིར་དཔར་བསྐྲུན་ཞུས་པའོ། །

•••

CENTRAL INSTITUTE OF HIGHER TIBETAN STUDIES
SARNATH, VARANASI

**List of Books Published under Rare Buddhist Texts Series**

1. Guhyādi-Aṣṭasiddhi Saṁgraha (1988) : Rs. 115 Hb, 90 Pb.
2. Jñānodaya Tantra (1988) : Rs. 15Pb.
3. Durlabha Grantha Paricaya Vol. I (1990) : Rs. 55Hb.
4. Durlabha Granthoṁ kī Ādhāra Sāmagrī, Vol. I (1990) : Rs. 40Hb.
5. Bauddha Tantra Kośa, Vol. I (1990) : Rs. 45Hb, Rs. 40Pb.
6. Lupta Bauddha Vacana Saṁgraha, Vol. I (1990) : Rs. 40Hb, Rs. 30Pb.
7. Vasantatilaka of Kṛṣṇapāda with commentary (1990) :
   Rs. 95Hb, Rs. 70Pb.
8. Ḍākinījālasaṁvararahasya (1990) : Rs. 15Pb.
9. Kṛṣṇayamāri Tantra with Ratnāvalīpañjikā of Kumāracandra (1992) : Rs. 150Hb, Rs. 100Pb.
10. Mahāmāyā Tantra with Guṇavatīṭīkā of Ratnākaraśānti (1992) : Rs. 70Hb, Rs. 50Pb.
11. Abhisamayamañjarī of Śubhākaragupta (1993) : Rs. 35Pb.
12. Vimalaprabhāṭīkā, Vol. II (1994) : Rs. 110Hb, Rs. 75Pb.
13. Vimalaprabhāṭīkā, Vol. III (1994) : Rs. 110Hb, Rs. 70Pb.
14. Bauddha Tantra Kośa, Vol. II (1997) : Rs. 100Hb, Rs. 85Pb.
15. Sūtratantrodbhava-Katipaya-Dharaṇīmantrāḥ (1997) : Rs. 75Hb, Rs. 55Pb.
16. Adhyātmasāraśataka (1997) : Rs. 40Pb.

17. Durlabha Bauddha Grantha Paricaya, Vol. II (1997) : Rs. 150Hb, Rs. 125Pb.
18. Durlabha Granthoṁ kī Ādhāra Sāmagrī, Vol. II (1997) : Rs. 180Hb, Rs. 150Pb.
19. Bauddha Laghu Grantha Saṁgraha (1997) : Rs. 110Hb, Rs. 80Pb.
20. Siddhaikavīramahātantra (1998) : Rs. 90Hb, Rs. 60Pb.
21. Yoginīsañcāratantra with Ṭīkā (1998) : Rs. 170Hb, Rs. 140Pb.
22. Caryāmelāpakapradīpa of Āryadeva (2000) : Rs. 160Hb, Rs. 110Pb.
23. Tattvajñānasaṁsiddhi with Commentary (2000) : Rs. 135 Hb, Rs. 100Pb.
24. Kurukullākalpa (2001) : Rs. 100Hb, Rs. 65Pb.
25. Lupta-Bauddha-Vacana-Saṃgraha, Vol. II (2001) : Rs. 110Hb., Rs. 70Pb.
26. Śrīcakrasaṁvaratantra with Vivṛti by Bhavabhaṭṭa, Vol. I-II (2002) : Rs. 400Hb, Rs. 300 Pb (set of 2 vols.).
27. Durlabha Granthoṁ kī Ādhāra Sāmagrī, Vol. III (2004) : Rs. 230 Hb, Rs. 140 Pb.
28. Bauddha Tantra Vāṅmaya, Vol. 1 (2006) : Rs. 145Hb, Rs. 95Pb.
29. Sampādana ke Siddhānta aur Upādāna : (Proceedings of Workshop) (1990) : Rs. 150Hb, Rs. 100Pb.
30. Bhāratīya Tantraśāstra (Proceedings of Workshop) (1995) : Rs. 380Hb, Rs. 220Pb.
31. ***Dhīḥ :*** Complete set (Vol. I to XLII) : Total Rs. 3009.00

●●●